उपस्तरणाभिघारणाश्रयत्वात् ' इति, नोपस्तरणाभिघारणवचनं चतुरवत्तस्य वाक्यशेषभूतं, यथा 'सप्तदश सामिधेनीरनुब्रूयात्' इति मित्रविन्दाऽऽदिषु सप्तदश अनुब्रूयात् इति, नैवमिह चतुरवद्येत्। कथम्? उपस्तृणीयात् अभिघारयेच्चेति। कथं तर्हि? चतुरवदानसंयुक्तं द्रव्यं जुहुयात् हविश्च उपस्तृणीयात्, अभिघारयेच्चेति। यत्र हविषि उपस्तीर्यमाणे अभिघार्यमाणे च चतुरवत्तयुक्तं प्रदानं भवति, तत्र न प्रधानद्रव्यात् चतुरवदातव्यम्। यत्र पुनः प्रधानद्रव्यात् चतुरवखण्डनमन्तरेण न चतुरवत्तं भवति, तत्र प्रधानद्रव्यात् चतुरवदातव्यम्। चतुरवत्तभूतमिह होतव्यं विवक्ष्यते नेतस्ततो वा चतुरवदातव्यमिति। तस्मात् उपांशुयाजेऽपि चतुरवत्तं कर्तव्यमिति।

**सोम**— पूर्वाधिकरणोक्तद्व्यवदाननियमोपजीवनेन प्रकारविधिः इत्युत्थानात् संगतिः।

**वि**— 'उपांशुयाजे किं न स्यादवदानचतुष्टयम्। स्याद्वा, नास्त्युपसंहारात्, नानूक्तिर्वाक्यतोऽस्ति तत्॥' 'चतुरवत्तं जुहोति' इति वाक्यात् अस्त्युपांशुयाजे चतुरवत्तम्।

**भाट्ट**— यदा चतुःसंख्याया अपि उद्देश्यताऽवच्छेदककोटिप्रविष्टत्वेन चतुःसंख्याकावदानविधिकल्पना, तदा किमुपांशुयाजे चतुरवत्तं भवति न इति कृत्वाचिन्तया चिन्त्यते। इदं च उपांशुयाजे चतुर्गृहीतविधिर्नास्तीति कृत्वाचिन्ताऽन्तरं बोध्यम्। तत्रावदानाङ्गभूतचतुःसंख्यायाः औषधसांनाय्ययोः पशुवदुपस्तरणाभिघारणाभ्यां संपादितत्वात् उपस्तरणाभिघारणयोश्च स्रुचि असंसर्गार्थतया उपांशुयाजे अर्थलोपान्निवृत्तेः चतुरवत्तस्यापि लोपः। इति प्राप्ते, विहितचतुःसंख्यायाः 'द्विर्हविषोऽवद्यति' इत्यनेन हविषो द्विरवदाने विहिते औषधसांनाय्यस्थले उपस्तरणाभिघारणाभ्यां पशुवत् संपादनेऽपि संकोचे प्रमाणाभावेन उपांशुयाजेऽपि प्रवृत्तायास्तस्या हविषैव संपादनोपपत्तेर्लोपे प्रमाणाभावात् कर्तव्यमेव चतुरवत्तम्। वस्तुतस्तु पूर्वोक्तविधया अवत्तोद्देशेनैव प्रक्षेपविधानात् चतुःसंख्याया उद्देश्यताऽवच्छेदककोटिप्रवेशाभावेन अविधेयत्वादुपांशुयाजे उपस्तरणाभिघारणयोः प्रयोजनाभावेन लोपेऽपि 'द्विर्हविषोऽवद्यति' इत्यनेन द्वि अवदानस्यैव प्राप्तौ 'चतुर आज्यस्य गृह्णाति' इत्युपांशुयाजावान्तरप्रकरणपठितवाक्येन उपांशुयाजोद्देशेन ध्रौवापादानकचतुर्गृहीतविधानात् तेनैवोपांशुयाजः, तस्यैव च प्रक्षेपः प्रतिपत्तिः। यत्त्वनारभ्याधीतं 'चतुर्गृहीतं जुहोति' इति वचनं, तेन अविहितद्रव्यकभेदनहोमाद्यनुवादेन चतुर्गृहीतविधानं, न तूपांशुयाजे, जुहोतिना यागलक्षणायां प्रमाणाभावात्, प्राकरणिकध्रौवविधिना तस्यैव द्व्यवदानप्रसक्तौ अनारभ्याधीतचतुर्गृहीतबाधप्रसङ्गाच्च। अतः 'आज्याच्च सर्वसंयोगात्' इत्यधिकरणभाष्यलिखितोपांशुयाजप्रकरणपठितवाक्यादेव तत्र चतुर्गृहीतविधिः। तस्यैव च तदीयप्रक्षेपः प्रतिपत्तिरिति सिद्धम्।

**मण्डन**— 'उपांशौ च चतुर्ग्रहः।' १४.

**शंकर**— 'उपांशुयाजोऽपि तद्भवेत्।' (उपांशुयाजे तु तद्भवेत् इति पाठ आवश्यकः। तत् चतुरवत्तम्)।